द्वापरान्ते भविष्यामि यदुवंशकुलोद्भवः।
देवक्यां वसुदेवस्य कृष्णो नाम्ना महामते! ॥ ७९ ॥
तदानीं मां समासाद्य स्मारयेथा यथातथम्।
तत्र त्वां गीतसम्पन्नं करिष्यामि महाव्रतम् ॥ ८० ॥
तुम्बरोश्च समञ्चैव तथातिशयसंयुतम्।
तावत्कालं यथायोगं देवगन्धर्वयोनिषु ॥ ८१ ॥
शिक्षयस्व यथा न्यायमित्युक्त्वान्तरधीयत।
ततो मुनिः प्रणम्यैनं वीणावादनतत्परः ॥ ८२ ॥
देवर्षिर्देवसङ्काशः सर्वाभरणभूषितः।
तपसां निधिरत्यन्तं वासुदेवपरायणः ॥ ८३ ॥
स्कन्धे विपञ्चीमासाद्य सर्वलोकांश्चचार सः।
वारुणं याम्यमाग्नेयं ऐन्द्रं कौबेरमेव च ॥ ८४ ॥
वायव्यञ्च तथेशानं संसदं प्राप्य धर्मवित्।
गायमानो हरिं सम्यग्वीणा वादविचक्षणः ॥ ८५ ॥
गन्धर्वाप्सरसां सङ्घैः पूज्यमानस्ततस्ततः।
ब्रह्मलोकं समासाद्य कस्मिंश्चित् कालपर्य्यये ॥८६॥
हाहा हूहूश्च गन्धर्वौ गीतवाद्यविशारदौ।
ब्रह्मणो गायकौ दिव्यौ नित्यौ गन्धर्वसत्तमौ ॥ ८७ ॥
तत्र ताभ्यां समासाद्य गायमानो हरिं प्रभुम्।
ब्रह्मणा च महातेजाः पूजितो मुनिसत्तमः ॥ ८८ ॥
तं प्रणम्य महात्मानं सर्वलोकपितामहम्।
चचार च यथाकामं सर्वलोकेषु नारदः ॥ ८९ ॥
ततः कालेन महता गृहं प्राप्य च तुम्बरोः।
वीणामादाय तत्रस्थो ह्यगायत महामुनिः ॥ ९० ॥

स्वरकन्यास्तु तत्रस्थाः षड्‌जाद्याः सप्त वै मताः ।
क्रीडतो भगवान् दृष्ट्वा निर्गतश्च सुसत्वरम् ॥ ९१
शिक्षयामास बहुशस्तत्र तत्र महामतिः ।
श्रमयोगेन संयुक्तो नारदोऽपि महामुनिः ॥ ९२ ॥
सप्तस्वराङ्गनाः पश्यन् गानविद्याविशारदः ।
आसीद्वीणा समायोगे न ता स्वस्थाः प्रपेदिरे ॥ ९३
ततो रैवतके कृष्णं प्रणिपत्य महामुनिः ।
विज्ञापयदशेषन्तु श्वेतद्वीपे तु यत् पुरा ॥ ९४ ॥
नारायणेन कथितं गानयोगमनुत्तमम् ।
तच्छ्रुत्वा प्राहसन् कृष्णः प्राह जाम्बवतीं मुदा ॥९५॥
एवं मुनिवरं भद्रे शिक्षयस्व यथाविधि ।
वीणागानसमायोगे तथेत्युक्ता च सा हरिम् ॥ ९६ ॥
प्रहसन्ती यथा योगं शिक्षयामास तं मुनिम् ।
ततः संवत्सरे पूर्णे पुनरागम्य माधवम् ॥ ९७ ॥
प्रणिपत्याग्रतस्तस्थौ पुनराह स केशवः ।
सत्या समीपमागच्छ शिक्षयस्व यथाविधि ॥ ९८ ॥
तथेत्युक्त्वा सत्यभामां प्रणिपत्य जगौ मुनिः ।
तद्वा स शिक्षितो विद्वान् पूर्णे संवत्सरे पुनः ॥ ९९ ॥
वासुदेवनियुक्तोऽसौ रुक्मिणीसदनं गतः ।
अङ्गनाभिस्ततस्ताभिर्दासीभिर्मुनिसत्तमः ॥ १०० ॥
उक्तोऽसौ गायमानोऽपि न स्वरं वेत्सि वै मुने ! ।
ततः श्रमेण महता वत्सरत्रयसंयुतम् ॥ १०१ ॥
शिक्षितोऽसौ तदा देव्या रुक्मिण्यापि जगौ मुनिः ।
ततः स्वराङ्गनाः प्राप्य तन्त्रीयोगं महामुने ॥ १०२॥

आहूय कृष्णो भगवान् स्वयमेव महामुनिम्।
अशिक्षयद्भिरात्मा गानयोगमनुत्तमम् ॥ १०३ ॥
ततोऽतिशयमापन्नस्तुम्बरोर्मुनिसत्तमः।
ततो ननर्त्त देवर्षिः प्रणिपत्य जनार्दनम् ॥ १०४ ॥
उवाच च हृषीकेशः सर्वज्ञस्त्वं महामुने!।
प्रहृष्य ज्ञानयोगेन गायस्व मम सन्निधौ ॥ १०५ ॥
एतत्ते प्रार्थितं प्राप्तं मम लोके तथैव च।
नित्यं तुम्बरुणा सार्धं गायस्व च यथातथम् ॥ १०६ ॥
एवमुक्तो मुनिस्तत्र यथायोगञ्चचार सः।
यदा सम्पूजयन् कृष्णो रुद्रं भुवननायकम् ॥ १०७ ॥
तदा जगौ हरिस्तस्य नियोगाच्छङ्कराय वै।
रुक्मिण्या सह सत्या च जाम्बवत्या महामुनिः॥१०८॥
कृष्णेन च नृपश्रेष्ठ! श्रुतिजातिविशारदः।
एष वो मुनिशार्दूलाः! प्रोक्तो गीतक्रमो मुनेः ॥१०९॥
ब्राह्मणो वासुदेवाख्यं गायमानो भृशं नृप!।
हरेः सालोक्यमाप्नोति रुद्रगानोऽधिको भवेत् ॥ ११०॥
अन्यथा नरकं गच्छेद्गायमानोऽन्यदेव हि।
कर्मणा मनसा वाचा वासुदेवपरायणः ॥ १११ ॥
गायन् शृण्वंस्समाप्नोति तस्मात्श्रेयं परं विदुः ११२ ॥
इत्यादि महापुराणे श्रीलैङ्गे उपरिभागे वैष्णव-

गीतकथनं नाम तृतीयोऽध्यायः। ३ ॥



## चतुर्थोऽध्यायः।



ऋषय ऊचुः।

वैष्णवा इति ये प्रोक्ता वासुदेवपरायणाः।
कानि चिह्नानि तेषां वै तन्नो ब्रूहि महामते! ॥ १ ॥
तेषां वा किं करोत्येष भगवान् भूतभावनः।
एतन्मे सर्वमाचक्ष्व सूत! सर्वार्थवित्तम! ॥ २ ॥

सूत उवाच।

अम्बरीषेण वै पृष्टो मार्कण्डेयः पुरा मुनिः।
युष्माभिरद्य यत् प्रोक्तं तद्वदामि यथातथम् ॥ ३ ॥

मार्कण्डेय उवाच।

शृणु राजन्! यथा न्यायं यन्मां त्वं परिपृच्छसि!।
यत्रास्ते विष्णुभक्तास्तु तत्र नारायण स्थितः ॥ ४ ॥
विष्णुरेव हि सर्वत्र येषां वै देवता स्मृता।
कीर्त्यमाने हरौ नित्यं रोमाञ्चो यस्य वर्त्तते ॥ ५ ॥
कम्पः स्वेदस्तथाक्षेषु दृश्यन्ते जलबिन्दवः।
विष्णुभक्तिसमायुक्तान् श्रौतस्मार्त्तप्रवर्त्तकान् ॥ ६ ॥
प्रीतो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्त्तितः।
नान्यदाच्छादयेद्वस्त्रं वैष्णवो जगती रणे ॥ ७ ॥
विष्णुभक्तमथायान्तं यो दृष्ट्वा सम्मुखस्थितः।
प्रणामादि करोत्येवं वासुदेवे यथा तथा ॥ ८ ॥

स वै भक्त इति ज्ञेयः स जयी स्याज्जगत्त्रये ।
कृष्णाचराणि शृण्वन् वै तथा भागवतेरितः ॥ ९ ॥
प्रणामपूर्वं क्षान्त्या वै यो वदेद्वैष्णवो हि सः ।
गन्धपुष्पादिकं सर्वं शिरसा यो हि धारयेत् ॥ १० ॥
हरेः सर्वमितीत्येवं मत्वासौ वैष्णवः स्मृतः ।
विष्णोर्नेत्रे शुभान्येव करोति स्नेहसंयुतः ॥ ११ ॥
प्रतिमाश्च हरेर्नित्यं पूजयेत् प्रयतात्मवान् ।
विष्णुभक्तः स विज्ञेयः कर्मणा मनसा गिरा ॥ १२ ॥
नारायणपरो नित्यं महाभागवतो हि सः ।
भोजनाराधनं सर्वं यथाशक्त्या करोति यः ॥ १३ ॥
विष्णुभक्तस्य च सदा यथा न्यायं हि कथ्यते ।
नारायणपरो विद्वान् यस्यान्नं प्रीतमानसः ॥ १४ ॥
अश्नाति तच्छरीरस्थं गतमन्नं न संशयः ।
स्पर्शनादपि विश्वात्मा प्रीतो भवति माधवः ॥ १५ ॥
महाभागवते तत्र हृष्टासौ भक्तवत्सलः ।
वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् ॥ १६ ॥
देवापि भीतास्तं यान्ति प्रणिपत्य यथागतम् ।
श्रूयतां हि पुरावृत्तं विष्णुभक्तस्य वैभवम् ॥ १७ ॥
दृष्ट्वा यमोऽपि वै भक्तं वैष्णवं दग्धकिल्बिषम् ।
उत्थाय प्राञ्जलिर्भूत्वा ननाम मधुसूदनम् ॥ १८ ॥
तस्मात् सम्पूजयेद्भक्त्या वैष्णवान् विष्णुवन्नरः ।
स याति विष्णुसामीप्यं नात्र कार्य्या विचारणा ॥१९॥
अन्यभक्तसहस्रेभ्यो विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो रुद्रभक्तो विशिष्यते ।

रुद्रभक्तात् परतरो नास्ति लोके न संशयः ॥ २० ॥
तस्मात्तु वैष्णवश्चापि रुद्रभक्तमथापि वा ।
पूजयेत् सर्वयत्नेन धर्मकामार्थमुक्तये ॥ २१ ॥

इत्यादि महापुराणे श्रीलैङ्गे उपरिभागे विष्णुभक्त-
कथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

ऋषय ऊचुः ।
ऐक्ष्वाकुरम्बरीषो वै वासुदेवपरायणः ।
पालयामास पृथिवीं विष्णोराज्ञा पुरःसरः ॥ १ ॥
श्रुतमेतन्महाबुद्धे तत्सर्वं वक्तुमर्हसि ।
नित्यं तस्य हरेश्चक्रं शत्रुरोगभयादिकम् ॥ २ ॥
हन्तीति श्रूयते लोके धार्मिकस्य महात्मनः ।
अम्बरीषस्य चरितं तत् सर्वं ब्रूहि सत्तम ! ॥ ३ ॥
माहात्म्यमनुभावञ्च भक्तियोगमनुत्तमम् ।
यथावच्छ्रोतुमिच्छामः सूत ! वक्तुं त्वमर्हसि ॥ ४ ॥
सूत उवाच ।
श्रूयतां मुनिशार्दूलाश्चरितं तस्य धीमतः ।
अम्बरीषस्य माहात्म्यं सर्वं पापहरं परम् ॥ ५ ॥

त्रिषष्टोर्दयिता भार्या सर्वलक्षणशोभिता।
अम्बरीषस्य जननी नित्यं शौचसमन्विता ॥ ६ ॥
योगनिद्रासमारूढं शेषपर्य्यङ्कशायिनम्।
नारायणं महात्मानं ब्रह्माण्डकमलोद्भवम् ॥ ७ ॥
तमसा कालरुद्राख्यं रजसा कनकाण्डजम्।
सत्वेन सर्वगं विष्णुं सर्वदेवनमस्कृतम् ॥ ८ ॥
अर्च्चयामास सततं वाङ्मनः कायकर्म्मभिः।
माल्यदानादिकं सर्वं स्वयमेवमचीकरत् ॥ ९ ॥
गन्धादिपेषणञ्चैव धूपद्रव्यादिकं तथा।
भूमेरालेपनादीनि हविषां पचनं तथा ॥ १० ॥
तत् कौतुकसमाविष्टा स्वयमेव चकार सा।
शुभा पद्मावती नित्यं वाचा नारायणेति वै ॥ ११ ॥
अनन्ते त्येव सा नित्यं भाषमाणा पतिव्रता।
दश वर्षसहस्राणि तत्परेणान्तरात्मना ॥ १२ ॥
अर्च्चयामास गोविन्दं गन्धपुष्पादिभिः शुचिः।
विष्णुभक्तान्महाभागान् सर्वपापविवर्जितान् ॥ १३ ॥
दानमानार्च्चनैर्नित्यं धनैरत्नैरतोषयत्।
ततः कदाचित् सा देवी द्वादशीं समुपोष्य वै ॥ १४ ॥
हरेरग्रे महाभागा सुष्वाप पतिना सह।
तत्र नारायणो देवस्तामाह पुरुषोत्तमः ॥ १५ ॥
किमिच्छसि वरं भद्रे ! मत्तस्त्वं ब्रूहि भामिनि ! ।
सा दृष्ट्वा तु वरं वव्रे पुत्रो मे वैष्णवो भवेत् ॥ १६ ॥
सार्वभौमो महातेजाः स्वकर्म्मनिरतः शुचिः।
तथेत्युक्त्वा ददौ तस्यै फलमेकं जनार्दनः ॥ १७ ॥

सा प्रबुद्धा फलं दृष्ट्वा भर्त्रे सर्वं न्यवेदयत् ।
भक्षयामास संहृष्टा फलं तद्गतमानसा ॥ १८ ॥
ततः कालेन सा देवी पुत्रं कुलविवर्धनम् ।
असूत सा सदाचारं वासुदेवपरायणम् ॥ १९ ॥
शुभलक्षणसम्पन्नं चक्राङ्किततनूरुहम् ।
जातं दृष्ट्वा पिता पुत्रं क्रियाः सर्वाश्चकार वै ॥ २०
अम्बरीष इति ख्यातो लोके समभवत् प्रभुः ।
पितर्य्युपरते श्रीमान् अभिषिक्तो महामुनिः ॥ २१
मन्त्रिष्वाधाय राज्यं च तप उग्रं चकार सः ।
ससंवत्सरसहस्रं वै जपन्नारायणं प्रभुम् ॥ २२ ॥
हृत्पुण्डरीकमध्यस्थं सूर्य्यमण्डलमध्यतः ।
शङ्खचक्रगदापद्मं धारयन्तं चतुर्भुजम् ॥ २३ ॥
शुद्धजाम्बूनदनिभं ब्रह्मविष्णुशिवात्मकम् ।
सर्वाभरणसंयुक्तं पीताम्बरधरं प्रभुम् ॥ २४ ॥
श्रीवत्सवक्षसं देवं पुरुषं पुरुषोत्तमम् ।
ततो गरुडमारुह्य सर्वदेवैरभिष्टुतः ॥ २५ ॥
आजगाम स विश्वात्मा सर्वलोकनमस्कृतः ।
ऐरावतमिवाचिन्त्यं कृत्वा वै गरुडं हरिः ॥ २६ ॥
स्वयं शक्र इवासीनस्तमाह नृपसत्तमम् ।
इन्द्रोऽहमस्मि भद्रं ते किं ददामि वरश्च ते ॥ २७ ॥
सर्वलोकेश्वरोऽहं त्वां रक्षितुं समुपागतः ।

अम्बरीष उवाच ।

नाहं त्वामभिसन्धाय तप आस्थितवानिह ॥ २८ ॥
त्वया दत्तञ्च नेच्छामि गच्छ शक्र ! यथासुखम् ।

नम नारायणो नाथस्तं नमामि जगत्पतिम् ॥ २९ ॥
गच्छेन्द्र ! मा कथास्त्वत्र मम बुद्धिविलोपनम् ।
ततः प्रहस्य भगवान् स्वरूपमकरोद्धरिः ॥ ३० ॥
शार्ङ्गचक्रगदापाणिः खड्गहस्तो जनार्दनः ।
गरुडोपरि सर्वात्मा नीलाचल इवापरः ॥ ३१ ॥
देवगन्धर्वसङ्घैश्च स्तूयमानः समन्ततः ।
प्रणम्य स च सन्तुष्टस्तुष्टाव गरुडध्वजम् ॥ ३२ ॥
प्रसीद लोकनाथेश ! मम नाथ ! जनार्दन ! ।
कृष्ण ! विष्णो ! जगन्नाथ ! सर्वलोकनमस्कृत ! ॥३३॥
त्वमादिस्त्वमनादिस्त्वमनन्तः पुरुषः प्रभुः ।
अप्रमेयो विभुर्विष्णुर्गोविन्दः कमलेक्षणः ॥ ३४ ॥
महेश्वराङ्गजो मध्ये पुष्करः खगमः खगः ।
कव्यवाहः कपाली त्वं हव्यवाहः प्रभञ्जनः ॥ ३५ ॥
आदिदेवः क्रियानन्दः परमात्मात्मनि स्थितः ।
त्वां प्रपन्नोऽस्मि गोविन्द ! जय देवकिनन्दन ! ।
जयदेव ! जगन्नाथ ! पाहि मां पुष्करेक्षण ! ॥ ३६ ॥
नान्या गतिस्त्वदन्या मे त्वमेव शरणं मम ।

सूत उवाच ।

तमाह भगवान् विष्णुः किं ते हृदि चिकीर्षितम् ॥३७॥
तत् सर्वं ते प्रदास्यामि भक्तोऽसि मम सुव्रत ! ।
भक्तिप्रियोऽहं सततं तस्माद्दातुमिहागतः ॥ ३८ ॥

अम्बरीष उवाच ।

लोकनाथ ! परानन्द ! नित्यं मे वर्त्तते मतिः ।
वासुदेवपरो नित्यं वाङ्मनःकायकर्मभिः ॥ ३९ ॥

यथा त्वं देवदेवस्य भवस्य परमात्मनः।
तथा भवाम्यहं विष्णो! तव देव! जनार्दन! ॥ ४०
पालयिष्यामि पृथिवीं कृत्वा वै वैष्णवं जगत्।
यज्ञहोमार्चनैश्चैव तर्पयामि सुरोत्तमान्॥ ४१॥
वैष्णवान् पालयिष्यामि निहनिष्यामि शात्रवान्।
लोकतापभये भीत इति मे धीयते मतिः॥ ४२॥
श्रीभगवानुवाच।
एवमस्तु यथेच्छं वै चक्रमेतत् सुदर्शनम्।
पुरा रुद्रप्रसादेन लब्धं वै दुर्लभं मया॥ ४३॥
ऋषिशापादिकं दुःखं शत्रुरोगादिकं तथा।
निहनिष्यति ते नित्यमित्युक्त्वान्तरधीयत॥ ४४॥
सूत उवाच।
ततः प्रणम्य मुदितो राजा नारायणं प्रभुम्।
प्रविश्य नगरीं रम्यामयोध्यां पर्य्यपालयत॥ ४५॥
ब्राह्मणादींश्च वर्णांश्च स्व स्व कर्मण्ययोजयत्।
नारायणपरो नित्यं विष्णुभक्तानकल्मषान्॥ ४६॥
पालयामास हृष्टात्मा विशेषेण जनाधिपः।
अश्वमेधशतैरिष्ट्वा वाजपेयशतेन च॥ ४७॥
पालयामास पृथिवीं सागरावरणामिमाम्।
गृहे गृहे हरिस्तस्थौ वेदघोषो गृहे गृहे॥ ४८॥
नामघोषो हरेश्चैव यज्ञघोषस्तथैव च।
अभवन् नृपशार्दूले तस्मिन् राज्यं प्रशासति॥ ४९
नासस्याना तृणा भूमिर्न दुर्भिक्षादिभिर्युता।
रोगहीनाः प्रजा नित्यं सर्वोपद्रववर्जिताः॥ ५०

अम्बरीषो महातेजाः पालयामास मेदिनीम् ।
तस्यैवं वर्त्तमानस्य कन्या कमललोचना ॥ ५१ ॥
श्रीमती नाम विख्याता सर्वलक्षणसंयुता ।
प्रदानसमयं प्राप्ता देवमायेव शोभना ॥ ५२ ॥
तस्मिन् काले मुनिः श्रीमान् नारदोऽभ्यागतश्च वै ।
अम्बरीषस्य राज्ञो वै पर्वतश्च महामतिः ॥ ५३ ॥
तावुभावागतौ दृष्ट्वा प्रणिपत्य यथाविधि ।
अम्बरीषो महातेजाः पूजयामास तावृषी ॥ ५४ ॥
कन्यां तां रममाणां वै मेघमध्ये शतह्रदाम् ।
प्राह तां प्रेक्ष्य भगवान् नारदः सस्मितस्तदा ॥ ५५ ॥
केयं राजन् ! महाभागा कन्या सुरसुतोपमा ।
ब्रूहि धर्मभृतां श्रेष्ठ ! सर्वलक्षणशोभिता ॥ ५६ ॥

राजोवाच ।

दुहितेयं मम विभो ! श्रीमती नाम नामतः ।
प्रदानसमयं प्राप्ता वरमन्वेषणे शुभा ॥ ५७ ॥
इत्युक्तो मुनिशार्दूलस्तामैच्छन् नारदो द्विजाः ! ।
पर्वतोऽपि मुनिस्तां वै चकमे मुनिसत्तमाः ! ॥ ५८ ॥
अनुज्ञाप्य च राजानं नारदो वाक्यमब्रवीत् ।
रहस्याहूय धर्मात्मा मम देहि सुतामिमाम् ॥ ५९ ॥
पर्वतो हि तथा प्राह राजानं रहसि प्रभुः ।
तावुभौ स च धर्मात्मा प्रणिपत्य भयार्दितः ॥ ६० ॥
उभौ भवन्तौ कन्यां मे प्रार्थयानौ कथं त्वहम् ।
करिष्यामि महाप्राज्ञ ! शृणु नारद ! मे वचः ॥ ६१ ॥
त्वञ्च पर्वत ! मे वाक्यं शृणु वक्ष्यामि यत् प्रभो ! ।

कन्येयं युवयोरेकं वरयिष्यति चेच्छुभा ॥ ६२ ॥
तस्मै कन्यां प्रयच्छामि नान्यथा शक्तिरस्ति मे ।
तथेत्युक्त्वा ततो भूयः श्वो यास्याव इति स्म ह ॥ ६३ ॥
इत्युक्त्वा मुनिशार्दूलौ जग्मतुः प्रीतिमानसौ ।
वासुदेवपरौ नित्यमुभौ ज्ञानविदां वरौ ॥ ६४ ॥
विष्णुलोकं ततो गत्वा नारदो मुनिसत्तमः ।
प्रणिपत्य हृषीकेशं वाक्यमेतदुवाच ह ॥ ६५ ॥
श्रोतव्यमस्ति भगवन्नाथ ! नारायण ! प्रभो ! ।
रहसि त्वां प्रवक्ष्यामि नमस्ते भुवनेश्वर ! ॥ ६६ ॥
ततः प्रहस्य गोविन्दः सर्वानुत्सार्य्य तं मुनिम् ।
ब्रूहीत्याह च विश्वात्मा मुनिराह च केशवम् ॥ ६७ ॥
त्वदीयो नृपतिः श्रीमानम्बरीषो महीपतिः ।
तस्य कन्या विशालाक्षी श्रीमती नाम नामतः ॥ ६८
परिणेतुमनास्तत्र गतोऽस्मि वचनं शृणु ।
पर्वतोऽयं मुनिः श्रीमांस्तव भृत्यस्तपोनिधिः ॥ ६९
तामैच्छत् सोऽपि भगवन्नावामाह जनाधिपः ।
अम्बरीषो महातेजाः कन्येयं युवयोर्वरम् ॥ ७० ।
लावण्ययुक्तं वृणुयाद्यदि तस्मै ददाम्यहम् ।
इत्याहवान् नृपस्तत्र तथेत्युक्त्वाहमागतः ॥ ७१ ॥
आगमिष्यामि ते राजन् ! श्वः प्रभाते गृहं प्रति ।
आगतोऽहं जगन्नाथ ! कर्त्तुमर्हसि मे प्रियम् ॥ ७२
वानराननवद्भाति पर्वतस्य मुखं यथा ।
तथा कुरु जगन्नाथ ! मम चेदिच्छसि प्रियम् ॥ ७३
तथेत्युक्त्वा स गोविन्दः प्रहस्य मधुसूदनः ।

त्वयोक्तञ्च करिष्यामि गच्छ सौम्य! यथागतम्॥ ७४॥
एवमुक्ता मुनिश्रेष्ठः प्रणिपत्य जनार्दनम्।
मन्यमानः कृतात्मानं तथायोध्यां जगाम सः॥ ७५॥
गते मुनिवरे तस्मिन् पर्वतोऽपि महामुनिः।
प्रणम्य माधवं हृष्टो रहस्येनमुवाच ह॥ ७६॥
वृत्तं तस्य निवेद्याग्रे नारदस्य जगत्पते!।
गोलाङ्गूलमुखं यद्वन्मुखं भाति तथा कुरु॥ ७७॥
तत् श्रुत्वा भगवान् विष्णुस्त्वयोक्तञ्च करोमि वै।
गच्छ शीघ्रमयोध्यां वै मा वेदीर्नारदस्य वै॥ ७८॥
त्वया मे संविदं तत्र तथेत्युक्ता जगाम सः।
ततो राजा समाज्ञाय प्राप्तौ मुनिवरौ तदा॥ ७९॥
माङ्गल्यैर्विविधैः सर्वामयोध्यां ध्वजमालिनीम्।
मण्डयामास पुष्पैश्च लाजैश्चैव समन्ततः॥ ८०॥
अम्बुसिक्तास्ट्टद्वारां सिक्तापणमहापथाम्।
दिव्यगन्धरसोपेतां धूपितां दिव्यधूपकैः॥ ८१॥
कृत्वा च नगरीं राजा मण्डयामास तां सभाम्।
दिव्यैर्गन्धैस्तथा धूपैरत्नैश्च विविधैस्तथा॥ ८२॥
अलङ्कृतां मणिस्तम्भैर्नानामाल्योपशोभिताम्।
परार्ध्यास्तरणोपेतैर्दिव्यैर्भद्रासनैर्वृताम्॥ ८३॥
कृत्वा नृपेन्द्रस्तां कन्यां आदाय प्रविवेश ह।
सर्वाभरणसम्पन्नां श्रीरिवायतलोचनाम्॥ ८४॥
करसम्मितमध्याङ्गीं पञ्चस्निग्धां शुभाननाम्।
स्त्रीभिः परिवृतां दिव्यां श्रीमतीं संश्रितां तदा॥ ८५॥
सभा च सा भूमिपतेः समृद्धा मणिप्रवेकोत्तमरत्नचित्रा।

न्यस्तासना माल्यवती सुवक्त्रा तामाययुस्ते नरराज वर्गाः
अथापरो ब्रह्मवरात्मजो हि त्रै विद्यविद्यो भगवान्महात्मा
सपर्वतो ब्रह्मविदां वरिष्ठो महामुनिर्नारद आजगाम।
तावागतौ समीक्ष्याथ राजा सम्भ्रान्तमानसः ।
दिव्यमासनमादाय पूजयामास तावुभौ ॥ ८८ ॥
उभौ देवर्षिसिद्धौ तौ उभौ ज्ञानविदां वरौ ।
समासीनौ महात्मानौ कन्यार्थं मुनिसत्तमौ ॥ ८९ ॥
तावुभौ प्रणिपत्याग्रे कन्यां तां श्रीमतीं शुभाम् ।
सुतां कमलपत्राक्षीं प्राह राजा यशस्विनीम् ॥ ९० ॥
अनयोर्य्यं वरं भद्रे ! मनसा त्वमिहेच्छसि ।
तस्मै मालामिमां देहि प्रणिपत्य यथाविधि ॥ ९१ ॥
एवमुक्ता तु सा कन्या स्त्रीभिः परिवृता तदा ।
मालां हिरण्मयीं दिव्यां आदाय शुभलोचना ॥ ९२ ॥
यत्रासीनौ महात्मानौ तत्रागम्य स्थिता तदा ।
वीक्षमाणा मुनिश्रेष्ठौ पर्वतं नारदं तथा ॥ ९३ ॥
शाखामृगाननं दृष्ट्वा नारदं पर्वतं तथा ।
गोलाङ्गूलमुखं कन्या किञ्चित् त्राससमन्विता ॥ ९४ ॥
सम्भ्रान्तमानसा तत्र प्रवातकदली यथा ।
तस्थौ तामाह राजासौ वत्से ! किं त्वं करिष्यसि॥९५॥
अनयोरेकमुद्दिश्य देहि मालामिमां शुभे ! ।
सा प्राह पितरं त्रस्ता इमौ तौ नरवानरौ ॥ ९६ ॥
मुनिश्रेष्ठं न पश्यामि नारदं पर्वतं तथा ।
अनयोर्मध्यतस्त्वेकमूनषोडशवार्षिकम् ॥ ९७ ॥
सर्वाभरणसम्पन्नमतसीपुष्पसन्निभम् ।

दीर्घबाहुं विशालाक्षं तुङ्गोरस्थलमुत्तमम् ॥ ९८ ॥
रेखाङ्कितकटिग्रीवं रक्तान्तायतलोचनम्।
नम्रचापानुकरणपटुभ्रू युगशोभितम् ॥ ९९ ॥
विभक्तत्रिवलीव्यक्तं नाभिव्यक्तशुभोदरम्।
हिरण्याम्बरसंवीतं तुङ्गरत्ननखं शुभम्।
पद्माकारकरं त्वेनं पद्मास्यं पद्मलोचनम् ॥ १०० ॥
सुनासं पद्महृदयं पद्मनाभं श्रियावृतम्।
दन्तपंक्तिभिरत्यर्थं कुन्दकुड्मलसन्निभैः ॥ १०१ ॥
हसन्तं मां समालोक्य दक्षिणञ्च प्रसार्य्य वै।
पाणिं स्थितमम्मुं तत्र पश्यामि शुभमूर्धजम् ॥१०२॥
सम्भ्रान्तमानसां तत्र वेपतीं कदलीमिव।
स्थितां तामाह राजासौ वत्से! किं त्वं करिष्यसि १०३
एवमुक्ते मुनिः प्राह नारदः संशयं गतः।
कियन्तो बाहवस्तस्य कन्ये! ब्रूहि यथातथम् ॥१०४॥
बाहुद्वयञ्च पश्यामीत्याह कन्या शुचिस्मिता।
प्राह तां पर्वतस्तत्र तस्य वक्षस्थले शुभे ॥ १०५ ॥
किं पश्यसि च मे ब्रूहि करे किं वास्य पश्यसि।
कन्या तमाह मालां वै पञ्चरूपामनुत्तमाम् ॥१०६॥
वक्षस्थलेऽस्य पश्यामि करे कार्मुकसायकान्।
एवमुक्तौ मुनिश्रेष्ठौ परस्परमनुत्तमौ ॥ १०७ ॥
मनसा चिन्तयन्तौ तौ मायेयं कस्यचिद् भवेत्।
मायावी तस्करो नूनं स्वयमेव जनार्दनः ॥ १०८ ॥
आगतो न यथा कुर्य्यात् कथमस्मन्मुखं त्विदम्।
गोलाङ्गूलत्वमित्येवं चिन्तयामास नारदः ॥ १०९ ॥

पर्वतोऽपि यथान्यायं वानरत्वं कथं मम ।
प्राप्तमित्येव मनसा चिन्तामापेदिवांस्तथा ॥ ११०
ततो राजा प्रणम्यासौ नारदं पर्वतं तथा ।
भवद्भ्यां किमिदं तत्र कृतं बुद्धिविमोहजम् ॥ ११
स्वस्थौ भवन्तौ तिष्ठेतां यथा कन्यार्थमुद्यतौ ।
एवमुक्तौ मुनिश्रेष्ठौ नृपमूचतुरुल्बणौ ॥ ११२ ॥
त्वमेव मोहं कुरुषे नावामिह कथञ्चन ।
आवयोरेकमेषा ते वरयत्वेव मा चिरम् ॥ ११३ ॥
ततः सा कन्यका भूयः प्रणिपत्येष्टदेवताम् ।
मायामादाय तिष्ठन्तं तयोर्मध्ये समाहितम् ॥ ११४
सर्वाभरणसंयुक्तमतसीपुष्पसन्निभम् ।
दीर्घबाहुं सुपुष्टाङ्गं कर्णान्तायतलोचनम् ॥ ११५ ॥
पूर्ववत् पुरुषं दृष्ट्वा मालां तस्मै ददौ हि सा ।
अनन्तरं हि सा कन्या न दृष्टा मनुजैः पुनः ॥ ११६
ततो नादः समभवत् किमेतदिति विस्मितौ ।
तामादाय गतो विष्णुः स्वस्थानं पुरुषोत्तमः ॥ ११७
पुरा तदर्थमनिशं तपस्तप्त्वा वराङ्गना ।
श्रीमती सा समुत्पन्ना सा गता च तथा हरिम् ॥ ११
तावुभौ मुनिशार्दूलौ धिक्कृतावतिदुःखितौ ।
वासुदेवं प्रति तदा जग्मतुर्भवनं हरेः ॥ ११९ ॥
तावागतौ समीक्ष्याह श्रीमतीं भगवान् हरिः ।
मुनिश्रेष्ठौ समायातौ गूहस्वात्मानमत्र वै ॥ १२० ॥
तथेत्युक्त्वा च सा देवी प्रहसन्ती चकार ह ।
नारदः प्रणिपत्याग्रे प्राह दामोदरं हरिम् ॥ १२१

प्रियं हि कृतवानद्य मम त्वं पर्वतस्य हि ।
त्वमेव नूनं गोविन्द ! कन्यां तां हृतवानसि ॥ १२२ ॥
विमोह्यावां स्वयं बुद्ध्या प्रतार्य्य सुरसत्तम ! ।
इत्युक्तः पुरुषो विष्णुः पिधाय श्रोत्रमच्युतः ।
पाणिभ्यां प्राह भगवान् भवद्भ्यां किमुदीरितम्॥१२३॥
कामवानपि भावोऽयं मुनिवृत्तिरहो किल ! ।
एवमुक्तो मुनिः प्राह वासुदेवं स नारदः ॥ १२४ ॥
कर्णमूले मम कथं गोलाङ्गूलमुखन्त्विति ।
कर्णमूले तमाहेदं वानरत्वं कृतं मया ॥ १२५ ॥
पर्वतस्य मया विद्वन् ! गोलाङ्गूलमुखं तव ।
मया तव कृतं तत्र प्रियार्थं नान्यथा त्विति ॥ १२६ ॥
पर्वतोऽपि तथा प्राह तस्याप्येवं जगाद सः ।
शृण्वतोरुभयोस्तत्र प्राह दामोदरो वचः ॥ १२७ ॥
प्रियं भवद्भ्यां कृतवान् सत्येनात्मानमालभे ।
नारदः प्राह धर्मात्मा आवयोर्मध्यतः स्थितः ॥ १२८ ॥
धनुष्मान् पुरुषः कोऽत्र तां हृत्वा गतवान् किल ।
तत् श्रुत्वा वासुदेवोऽसौ प्राह तौ मुनिसत्तमौ ॥१२९॥
मायाविनो महात्मानो बहवः सन्ति सत्तमाः ।
तत्र सा श्रीमती नूनमदृष्टा मुनिसत्तमौ ! ॥ १३० ॥
चक्रपाणिरहं नित्यं चतुर्बाहुरिति स्थितः ।
तां तथा नाहमैच्छं वै भवद्भ्यां विदितं हि तत् ॥ १३१ ॥
इत्युक्तौ प्रणिपत्यैनमूचतुः प्रीतिमानसौ ।
कोऽत्र दोषस्तव विभो ! नारायण ! जगत्पते ! ॥१३२॥
दौरात्म्यं तत् नृपस्यैव मायां हि कृतवानसौ ।

इत्युक्तौ जग्मतुस्तस्मात् मुनी नारदपर्वतौ ॥ १३३
अम्बरीषं समासाद्य शापेनैनमयोजयत्।
नारदः पर्वतश्चैव यस्मादावामिहागतौ ॥ १३४ ॥
आहूय पश्चादन्यस्मै कन्यां त्वं दत्तवानसि।
मायायोगेन तस्मात्त्वां तमो ऽभिभविष्यति ॥ १३५
तेन चात्मानमत्यर्थं यथावत्त्वं न वेत्स्यसि।
एवं शापे प्रदत्ते तु तमोराशिरथोत्थितः ॥ १३६ ॥
नृपं प्रति ततश्चक्रं विष्णोः प्रादुरभूत् क्षणात्।
चक्रवित्रासितं घोरं तावुभौ तम अभ्यगात् ॥ १३७
ततः सन्त्रस्तसर्वाङ्गौ धावमानौ महामुनी।
पृष्ठतश्चक्रमालोक्य तमोराशिं दुरासदम् ॥ १३८ ॥
कन्यासिद्धिरहो प्राप्ता ह्यावयोरिति वेगितौ।
लोकालोकान्तमनिशं धावमानौ भयार्दितौ ॥ १३९
त्राहि त्राहीति गोविन्दं भाषमाणौ भयार्दितौ॥
विष्णुलोकं ततो गत्वा नारायण! जगत्पते! ॥ १४०
वासुदेव! हृषीकेश! पद्मनाभ! जनार्दन!।
त्राह्यावां पुण्डरीकाक्ष! नाथोऽसि पुरुषोत्तम! ॥ १४१
ततो नारायणश्चिन्त्यः श्रीमान् श्रीवत्सलाञ्छनः।
निवार्य्य चक्रं ध्वान्तञ्च भक्तानुग्रहकाम्यया ॥ १४२
अम्बरीषश्च मद्भक्तस्तथैतौ मुनिसत्तमौ।
अनयोरस्य च तथा हितं कार्य्यं मयाधुना ॥ १४३
आहूय तत्तमः श्रीमान् गिरा प्रह्लादयन् हरिः।
प्रोवाच भगवान् विष्णुः शृणुतां मे इदं वचः ॥ १४४
ऋषिशापो न चैवासीदन्यथा च वचो मम।

हृतो नृपाय रक्षार्थं नास्ति तस्यान्यथा पुनः। १४५
अम्बरीषस्य पुत्रस्य नप्तुः पुत्रो महायशाः।
श्रीमान् दशरथो नाम राजा भवति धार्मिकः ॥१४६॥
तस्याहमग्रजः पुत्रो रामनामा भवाम्यहम्।
तत्र मे दक्षिणो बाहुर्भरतो नाम वै भवेत्। १४७॥
शत्रुघ्नो नाम सव्यश्च शेषोऽसौ लक्ष्मणः स्मृतः।
तत्र मां समुपागच्छ गच्छेदानीं नृपं विना ॥१४८॥
मुनिश्रेष्ठौ च हित्वा त्वं इति स्माह च माधवः।
एवमुक्तं तमोनाशं तत्क्षणाच्च जगाम वै। १४९॥
निवारितं हरेश्चक्रं यथापूर्वमतिष्ठत।
मुनिश्रेष्ठौ भयान्मुक्तौ प्रणिपत्य जनार्दनम् ॥१५०॥
निर्गतौ शोकसन्तप्तौ ऊचतुस्तौ परस्परम्।
अद्य प्रभृति देहान्तमावां कन्यापरिग्रहम् ॥ १५१ ॥
न करिष्याव इत्युक्त्वा प्रतिज्ञाय च तावृषी।
योगध्यानपरौ शुद्धौ यथापूर्वं व्यवस्थितौ ॥ १५२ ॥
अम्बरीषश्च राजासौ परिपाल्य च मेदिनीम्।
सभृत्यज्ञातिसम्पन्नो विष्णुलोकं जगाम वै। १५३ ॥
मानार्थमम्बरीषस्य तथैव मुनिसिंहयोः।
रामो दाशरथिर्भूत्वा नात्मवेदीश्वरोऽभवत् १५४ ॥
मुनयश्च तथा सर्वे भृग्वाद्या मुनिसत्तमाः।
माया न कार्या विद्वद्भिरित्याहुः प्रेक्ष्य तं हरिम् ॥१५५॥
नारदः पर्वतश्चैव चिरं ज्ञात्वा विचेष्टितम्।
मायां विष्णोर्विनिन्द्यैव रुद्रभक्तौ बभूवतुः। १५६ ॥
एतद्धि कथितं सर्वं मया युष्माकमद्य वै।

अम्बरीषस्य माहात्म्यं मायाविलस्य वै हरेः॥ १५

यः पठेत् शृणुयाद्वापि श्रावयेद्वापि मानवः।

मायां विसृज्य पुण्यात्मा रुद्रलोकं स गच्छति॥ १६

इदं पवित्रं परमं पुण्यं वेदैरुदीरितम्।

सायं प्रातः पठेन्नित्यं विष्णोः सायुज्यमाप्नुयात्॥ १

इत्यादि महापुराणे श्रीलैङ्गे उत्तरभागे श्रीमत्याख्यान

नाम पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

ऋषय ऊचुः।

मायाविलं श्रुतं विष्णोर्देवदेवस्य धीमतः।

कथं ज्येष्ठा समुत्पत्तिर्देवदेवात् जनार्दनात्। १॥

वक्तुमर्हसि चास्माकं लोमहर्षण! तत्वतः।

सूत उवाच।

अनादिनिधनः श्रीमान् धाता नारायणः प्रभुः॥

जगद्द्वैधमिदञ्चक्रे मोहनाय जगत्पतिः।

विष्णुर्वै ब्राह्मणान् वेदान् वेदधर्मान् सनातनान्॥

श्रियं पद्मां तथा श्रेष्ठां भागमेकमकारयत्।

ज्येष्ठामलक्ष्मीमशुभां वेदबाह्यान् नराधमान्॥ ४

अधर्मश्च महातेजा आगमैकमवाप्नुयत्।
अलक्ष्मीमग्रतः सृष्ट्वा पश्चात् पद्मां जनार्दनः॥५॥
ज्येष्ठा ते न समाख्याता अलक्ष्मीर्द्विजसत्तमाः!।
अमृतोद्भववेलायां विषानन्तरमुत्थणात्॥६॥
अशुभा सा तथोत्पन्ना ज्येष्ठा इति च वै श्रुतम्।
ततः श्रीश्च समुत्पन्ना पद्मा विष्णुपरिग्रहः॥७॥
दुःसहो नाम विप्रर्षिरुपयेमे शुभां तदा।
ज्येष्ठां तां परिपूर्णोऽसौ मनसा वीक्ष्यधिष्ठिताम्॥८॥
लोकं चचार हृष्टात्मा तया सह मुनिस्तदा।
यस्मिन् घोषो हरेश्चैव हरस्य च महात्मनः॥९॥
वेदघोषस्तथा विप्रा! होमधूमस्तथैव च।
भस्माङ्गिनो वा यत्रासंस्तत्र तत्र भयार्दिता॥१०॥
पिधाय कर्णौ संयाति धावमाना इतस्ततः।
ज्येष्ठामेवंविधां दृष्ट्वा दुःसहो मोहमागतः॥११॥
तया सह वनं गत्वा चचार स महामुनिः।
तपो महद्वने घोरे याति कन्या प्रति गृहम्॥१२॥
न करिष्यामि चेत्युक्त्वा प्रतिज्ञाय च तामृषिः।
योगज्ञानपरः शुद्धो यत्र योगीश्वरो मुनिः॥१३॥
तत्रायान्तं महात्मानं मार्कण्डेयमपश्यत।
प्रणिपत्य महात्मानं दुःसहो मुनिमब्रवीत्॥१४॥
भार्य्येयं भगवन्! मह्यं न स्थास्यति कथञ्चन।
किं करोमीति विप्रर्षे! अनया सह भार्य्यया॥१५॥
प्रविशामि तथा कुत्र कुतो न प्रविशाम्यहम्।

मार्कण्डेय उवाच ।

शृणु दुःसह ! सर्वत्र अकीर्त्तिरशुभान्विता ॥ १६ ॥
अलक्ष्मीरतुला चेयं ज्येष्ठा इत्यभिशब्दिता ।
नारायणपरा यत्र वेदमार्गानुसारिणः ॥ १७ ॥
रुद्रभक्ता महात्मानो भस्मोद्धूलितविग्रहाः ।
स्थिता यत्र जना नित्यं मा विशेथाः कथञ्चन ॥ १८
नारायण ! हृषीकेश ! पुण्डरीकाक्ष ! माधव ।
अच्युतानन्तगोविन्द ! वासुदेव ! जनार्दन ! ॥ १९
रुद्र रुद्रेति रुद्रेति शिवाय च नमो नमः ।
नमः शिवतरायेति शङ्करायेति सर्वदा ॥ २० ॥
महादेव ! महादेव ! महादेवेति कीर्त्तयेत् ।
उमायाः पतये चैव हिरण्यपतये सदा ॥ २१ ॥
हिरण्यबाहवे तुभ्यं वृषाङ्काय नमो नमः ।
नृसिंह वामनाचिन्त्य माधवेति च ये जनाः ॥ २२
वदन्ति सततं हृष्टा ब्राह्मणाः क्षत्रियास्तथा ।
वैश्याः शूद्राश्च ये नित्यं तेषां धनगृहादिषु ।
आरामे चैव गोष्ठेषु न विशेथाः कथञ्चन ॥ २३ ॥
ज्वाला माला करालञ्च सहस्रादित्यसन्निभम् ।
चक्रं विष्णोरतीवोग्रं तेषां हन्ति सदा शुभम् ॥ २४
स्वाहाकारो वषट्कारो गृहे यस्मिन् हि वर्त्तते ।
तद्धित्वा चान्यनागच्छ सामघोषोऽथ यत्र वा ॥ २५
वेदाभ्यासरता नित्यं नित्यकर्मपरायणाः ।
वासुदेवार्चनरता दूरतस्तान् विसर्जयेत् ॥ २६ ॥
अग्निहोत्रं गृहे येषां लिङ्गार्चा वा गृहेषु च ।

वासुदेवतनुर्वापि चक्रिका यत्र तिष्ठति ॥ २७ ॥
दूरतो व्रज तान् हित्वा सर्वपापविवर्जितान् ।
नित्यनैमित्तिकैर्यज्ञैर्यजन्ति च महेश्वरम् ॥ २८ ॥
तान् हित्वा व्रज चान्यत्र दुःसह त्वं ममाज्ञया ।
श्रोत्रिया ब्राह्मणा गावो गुरवोऽतिथयः सदा ॥ २९ ॥
रुद्रभक्ताश्च पूज्यन्ते यैर्नित्यं तान् विवर्जयेत् ।

दुःसह उवाच ।

यस्मिन् प्रवेशो योग्यो मे तद् ब्रूहि मुनिसत्तम ! ॥३०॥
त्वद्वाक्याद्भयनिर्मुक्तो विशाम्येषां गृहे सदा ।

मार्कण्डेय उवाच ।

न श्रोत्रिया द्विजा गावो गुरवोऽतिथयः सदा ।
यत्र भर्त्ता च भार्य्या च परस्पर विरोधिनौ ॥ ३१ ॥
सभार्य्यस्त्वं गृहं तस्य विशेथा भयवर्जितः ।
देवदेवो महादेवो रुद्रस्त्रिभुवनेश्वरः ॥ ३२ ॥
विनिन्द्यो यत्र भगवान् विशस्व भयवर्जितः ।
वासुदेवरतिर्नास्ति यत्र नास्ति सदाशिवः ॥ ३३ ॥
जपहोमादिकं नास्ति भस्म नास्ति गृहे नृणाम् ।
पर्वण्यभ्यर्चनं नास्ति चतुर्दश्यां विशेषतः ॥ ३४ ॥
कृष्णाष्टम्याञ्च रुद्रस्य सन्ध्यायां भस्मवर्जिताः ।
चतुर्दश्यां महादेवं न यजन्ति च यत्र वै ॥ ३५ ॥
विष्णोर्नामविहीना ये सङ्गताश्च दुरात्मभिः ।
नमः कृष्णाय शर्वाय शिवाय परमेष्ठिने ॥ ३६ ॥
ब्राह्मणाश्च नरा मूढ़ा न वदन्ति दुरात्मकाः ।
तत्रैव सततं वत्स ! सभार्य्यस्त्वं समाविश ॥ ३७ ॥

मण्डले चोपतिष्ठन्ति तस्मात् कुर्वीत मण्डलम् ।
अन्यथा म्रियते यस्तु वृद्धो बालो युवापि वा ॥ १३ ॥
योऽन्यन्तरं न गच्छेत् स क्रीड़ते वायुना सह ।
तस्यैवं वायुभूतस्य नो श्राद्धं नोदकक्रिया ॥ १४ ॥
मम स्वेदसमुत्पन्नास्तिलास्तार्क्ष्य ! पवित्रकाः ।
असुरा दानवा दैत्या विद्रवन्ति तिलैः स्थितैः ॥ १५ ॥
एक एव तिलो दत्तो हेमद्रोणतिलैः समः ।
तर्पणे च तथा होमे दत्तो भवति चाक्षयः ॥ १६ ॥
दर्भा रोमसमुत्पन्नाः तिलाः स्वेदेषु नान्यथा ।
प्रयोगविधिना ब्रह्मा विश्वं वाप्युपजीवनात् ॥ १७ ॥
सव्ययज्ञोपवीतेन ब्रह्माद्यास्तृप्तिमाप्नुयुः ।
अपसव्येन तृप्यन्ति पितरो देवदेवताः ॥ १८ ॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये तु केशवः ।
दर्भाग्रे शङ्करं विद्यात् त्रयो देवाः कुशे स्थिताः ॥ १९ ॥
विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ! ।
नैते निर्माल्यतां यान्ति भोग्यमानाः पुनः पुनः ॥ २० ॥
कुशाः पिण्डेषु निर्माल्या: ब्राह्मणाः प्रेतभोजने ।
मन्त्राः शूद्रेषु पतिताश्चितायाञ्च हुताशनः ॥ २१ ॥
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ।
पञ्चप्रवाहणान्येव भवाब्धौ मज्जतां सताम् ॥ २२ ॥
विष्णुरेकादशी गङ्गा तुलसी विप्रधेनवः ।
असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ॥ २३ ॥
तिलाः पवित्रमतुलं दर्भाश्चापि तुलस्यपि ।
निवारयन्ति चैतानि दुर्गतिं प्राप्तमातुरम् ॥ २४ ॥
हस्ताभ्याञ्च धृतैर्दर्भैस्तोयेन प्रोक्षयेद् भुवम् ।
मृत्युकाले क्षिपेद्दर्भान् कारयेदातुरस्य च ॥ २५ ॥

दर्भेषु म्रियते योऽसौ दर्भैस्तु परिवेष्टितः ।
विष्णुलोकं स वै याति मन्त्रहीनोऽपि मानवः ॥ २६ ॥
दर्भतूलीगतः प्राणी संस्थितो भूमिपृष्ठतः ।
प्रायश्चित्तविशुद्धोऽसौ संसारे सारसागरे ॥ २७ ॥
गोमयेनोपलिप्ते च दर्भस्यास्तरणे स्थिते ।
तत्र दत्तेन दानेन सर्वं पापं व्यपोहति ॥ २८ ॥
लवणं सद्रसं दिव्यं सर्वकामप्रदं नृणाम् ।
यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ॥ २९ ॥
पितॄणाञ्च प्रियं भाव्यं तस्मात् सर्वप्रदं भवेत् ।
विष्णुदेहसमुत्पन्नो यतोऽयं लवणो रसः ॥ ३० ॥
एतत् सलवणं दानं तेन शंसन्ति योगिनः ।
ब्राह्मणः क्षत्रियो वैश्यः स्त्रीणां शूद्रजनस्य च ॥ ३१ ॥
आतुरस्य यदा प्राणान्नयन्ति वसुधातले ।
लवणन्तु तदा देयं द्वारस्योद्घाटनं दिवः ॥ ३२ ॥

इति श्रीगारुड़े महापुराणे प्रेतकल्पे एकोनविंशोऽध्यायः ।

---

## विंशोऽध्यायः ।

श्रीकृष्ण उवाच । शृणु तार्क्ष्य ! प्रवक्ष्यामि दानानां दानमुत्तमम्
येन दत्तेन प्रीणन्ति भूर्भुवःस्वरिति क्रमात् ॥ १ ॥
ब्रह्माद्या ऋषयः सर्वे शङ्कराद्यामरास्तथा ।
इन्द्राद्या देवताः सर्वे दानाद्धि प्रीतिमाप्नुयुः ॥ २ ॥
देयमेतन्महादानं प्रेतोद्धरणहेतवे ।
रुद्रलोके चिरं वासस्ततो राजा भवेदिह ॥ ३ ॥
रूपवान् सुभगो वाग्मी श्रीमानतुलविक्रमः ।
विहाय यमलोकं सः स्वर्गं तार्क्ष्य । प्रगच्छति ॥ ४ ॥
तिलांश्च गां क्षितिं हेम यो ददाति द्विजोत्तमे ।

तस्य जन्मार्जितं पापं तत्क्षणादेव नश्यति ॥ ५ ॥
तिला गावो महादानं महापातकनाशनम्।
तद्द्वयं दीयते विप्रे नान्यवर्णे कदाचन ॥ ६ ॥
कल्पितं दीयते विप्रे तिला गावश्च मेदिनी।
अन्येषु नैव वर्णेषु पोष्यवर्गे कदाचन ॥ ७ ॥
पोष्यवर्गे तथा स्त्रीषु दानं देयमकल्पितम्।
आतुरे चोपरागे तु दानं देयमशेषतः ॥ ८ ॥
आतुरे दीयते दानं यावद् देहोपतिष्ठति।
जीवता च पुनर्दत्तमुपतिष्ठत्यसंवृतम् ॥ ९ ॥
सत्यं सत्यं पुनः सत्यं यद्दत्तं विकलेन्द्रिये।
यच्चानुमोदते पुत्र ! तच्च दानमनन्तकम् ॥ १० ॥
अतो दद्यात् सुपुत्त्रेण यावज्जीवत्यसौ चिरम्।
अतिवाहस्तथा प्रेतो भोगांश्च लभते यतः ॥ ११ ॥
अस्वस्थातुरकाले तु देहपाते क्षितिस्थिते।
देहे तथातिवाहस्य परतः प्रीणनं भवेत् ॥ १२ ॥
तिलं लोहं हिरण्यञ्च कार्पासं लवणं तथा।
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ १३ ॥
तारयन्ति नरं गावस्त्रिविधाच्चैव पातकात्।
हेमदानात् सुखं स्वर्गे भूमिदानान्नृपो भवेत्।
हेमभूमिप्रदानाच्च न पीड़ा नरके भवेत् ॥ १४ ॥
सर्वेऽपि यमदूताश्च यमरूपातिभीषणाः।
सर्वे ते वरदा यान्ति सप्तधान्येन प्रीणिताः ॥ १५ ॥
विष्णोः स्मरणमात्रेण प्राप्यते परमाङ्गतिम्।
भूमिस्थं पितरं दृष्ट्वा अर्द्धोन्मीलितलोचनम् ॥ १६ ॥
तस्मिन् काले सुतो यस्तु सर्वदानानि दापयेत्।
स्वस्थानाच्चलिते श्वासे दानं यच्चातुरे ददेत् ॥ १७ ॥

अश्वमेधो महायज्ञो कलां नार्हति षोड़शीम्।
धर्मात्मा स च पुत्रोऽपि देवताभिः प्रपूज्यते ॥ १८ ॥
दापयेद् यस्तु दानानि ह्यातुरं पितरं प्रति।
लोहदानञ्च दातव्यं भूमियुक्तेन पाणिना ॥ १९ ॥
यमं भीमं स नाप्नोति न गच्छेत्तस्य वेश्मनि।
कुठारं मुषलं दण्डः खड्गश्च छुरिका तथा ॥ २० ॥
एतानि यमहस्तेषु निग्रहे पापकर्मणाम्।
तस्माल्लोहस्य दानन्तु आतुरे सततं ददेत् ॥ २१ ॥
यमायुधानां सन्तुष्ट्यै दानमेतदुदीरितम्।
गर्भस्थाः शिशवो ये तु युवानः स्थविरास्तथा ॥ २२ ॥
एभिर्दानविशेषैस्तु निर्दहेयुः स्वपातकम्।
कुणिाः सार्वसूत्रापाः शुण्डा मर्कास्त्वनुर्वराः।
शबला श्यामदूताश्च लोहदानेन प्रीणिताः ॥ २३ ॥
पुत्राः पौत्रास्तथा बन्धुः सगोत्रः सुहृदः स्त्रियः।
ददन्ति नातुरे दानं ब्रह्मघ्नाः सुसमाहितम् ॥ २४ ॥
पञ्चत्वे भूमियुक्तस्य शृणु तस्य च या गतिः।
अतिवाहः पुनः प्रेतो वर्षस्य सुकृतं लभेत् ॥ २५ ॥
पादादूर्द्ध्वं कटी यावत् तावद् ब्रह्माधितिष्ठति।
ग्रीवा यावद्धरिर्नाभेः शरीरे मनुजस्य तु ॥ २६ ॥
मस्तके तिष्ठते रुद्रो व्यक्ताव्यक्तो महेश्वरः।
एकमूर्त्तेस्त्रयो भेदा ब्रह्मविष्णुमहेश्वराः ॥ २७ ॥
अहं प्राणिशरीरस्थो भूतग्रामचतुष्टये।
धर्माधर्मे मतिं दद्यात् सुखदुःखे कृताकृते ॥ २८ ॥
जन्तोर्बुद्धिं समास्थाय पूर्वकर्माधिवासिताम्।
अहमेव तथा जीवाद् प्रेरयामि च कर्मसु ॥ २९ ॥
स्वर्गं मोक्षञ्च नरकं यान्ति च प्राणिनस्तथा।

स्वर्गस्थनरकस्थानां श्राद्धैराप्यायनम्भवेत्।
तस्माच्छ्राद्धानि कुर्वीत विविधानि विचक्षणः॥ ३०॥
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः।
रामो रामश्च कृष्णश्च बुद्धः कल्किस्तथैव च॥ ३१॥
एतानि दशनामानि स्मर्त्तव्यानि सदा बुधैः।
स्वर्गञ्चैव स वै याति च्युतः स्वर्गाच्च मानवः॥ ३२॥
लब्ध्वा सुखञ्च वित्तञ्च दयादाक्षिण्यसंयुतः।
पुत्रपौत्रसमायुक्तो जीवेत् स शरदां शतम्॥ ३३॥
आतुरे च ददेत् न्यासं विष्णुपूजाञ्च कारयेत्।
अष्टाक्षरं महामन्त्रं जपेद्वा द्वादशाक्षरम्॥ ३४॥
पूजयेच्छुक्लपुष्पैश्च नैवेद्यैर्घृतपाचितैः।
तथा गन्धैश्च धूपैश्च श्रुतिसूक्तैरनेकशः॥ ३५॥
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः।
यत्र विष्णुं न पश्यामि तत्र मे किं प्रयोजनम्॥ ३६॥
जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत्॥ ३७॥
वयमापो वयं पृथ्वी वयं दर्भा वयं तिलाः।
वयं गावो वयं राजा वयं वायुर्वयम्प्रजाः॥ ३८॥
वयं हेम वयं धान्यं वयं मधु वयं घृतम्।
वयं विप्रा वयं देवा वयञ्चैव स्वर्भूर्भुवः॥ ३९॥
अहं दाता अहं ग्राही अहं याजी अहं क्रतुः।
अहं कर्त्ता अहं हर्त्ता अहं धर्मो अहङ्गुरुः॥ ४०॥
धर्माधर्मे मतिं दद्यां कर्मभिस्तु शुभाशुभैः।
यत् कर्म कुरुते क्वापि पूर्वजन्मार्जितं खग!॥ ४१॥
धर्मे चिन्तामहं कर्त्ता ह्यधर्मे यम एव च।
यतीनां कुरुते सोऽपि धर्मे मुक्तिं ददाम्यहम्॥ ४२॥

मनुजानां हितं तार्क्ष्य! अन्ते वैतरणी नदी।
तया निहत्य पापौघं विष्णुलोकं स गच्छति॥ ४३॥
बालत्वे यच्च कौमारे वयःपरिणतौ तथा।
पूर्वावस्थाकृतं यच्च यच्च जन्मान्तरेष्वपि॥ ४४॥
यन्निशायान्तथा प्रातर्यन्मध्याह्नापराह्णयोः।
सन्ध्ययोर्यत् कृतम्पापं कर्मणा मनसा गिरा॥ ४५॥
दत्त्वा वरं सकृदपि कपिलां सर्वकामिकाम्।
उद्धरेदन्तकाले सा ह्यात्मानं पापसञ्चयात्॥ ४६॥
गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः।
गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम्॥ ४७॥
या लक्ष्मीः सर्वभूतानां या च देवे व्यवस्थिता।
धेनुरूपेण सा देवी मम पापं व्यपोहतु॥ ४८॥
इति श्रीगारुड़े महापुराणे प्रेतकल्पे विंशोऽध्यायः।

---

## एकविंशोऽध्यायः।

श्रीभगवानुवाच। ये नराः पापसंयुक्तास्ते गच्छन्ति यमालयम्।
अन्तकाले च गौर्दत्ता ह्यनन्तफलदा भवेत्॥ १॥
पादक्रमप्रमाणाब्दं स्वर्गे वसति भूमिदः।
अश्वारूढ़ाश्च ते यान्ति ददते ये ह्युपानहौ॥ २॥
अत्यातपश्रमयुता दह्यन्ते यत्र मानवाः।
छत्रदानेन वै प्रेता विचरन्ति यथासुखम्॥ ३॥
तमुद्दिश्य ददेदन्नं तेन चाप्यायितो भवेत्।
अन्धकारे महाघोरे अमूर्त्ते लक्ष्यवर्जिते।
उद्योतेनैव ते यान्ति दीपदानेन मानवाः॥ ४॥
आश्विने कार्त्तिके मासि माघे मासि मृताश्च ये।
चतुर्दश्याञ्च दीयेत दीपदानं सुखाय वै॥ ५॥

प्रत्यहञ्च प्रदातव्यं मार्गेषु विषमे नरैः।
यावत् संवत्सरं वापि प्रेतस्य सुखलिप्सया॥ ६॥
कुले मार्गे च शुद्धात्मा प्रकाशत्वञ्च गच्छति।
ज्योतिषामपि पूज्योऽसौ दीपदानरतो नरः॥ ७॥
प्राङ्मुखोदङ्मुखो दीपो देवागारे द्विजालये।
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे।
स गच्छति महामार्गे सर्वक्लेशविवर्जितः॥ ८॥
आसनभाजनभोज्यं दीयते च द्विजातये।
सुखेन भुञ्जमानस्तु सुखं गच्छति वै पथि॥ ९॥
कमण्डलुप्रदानेन तृषितः पिबते जलम्।
भाजनं चान्नदानञ्च कुसुमं चाङ्गुलीयकम्॥ १०॥
एकादशाहे दातव्यं प्रेतो याति पराङ्गतिम्।
त्रयोदशपदानीत्थं प्रेतस्य शुभमिच्छता॥ ११॥
दातव्यानि यथाशक्ति प्रेतोऽसौ प्रीणितो भवेत्।
भाजनानि पदञ्चैव कुम्भाश्चैव त्रयोदश॥ १२॥
मुद्रिका वस्त्रयुग्मञ्च तथा छत्रमुपानहौ।
एतावन्तः पदार्था हि प्रेतोद्देशेन दापयेत्॥ १३॥
वृषोत्सर्गे कृते तार्क्ष्य! प्रेतो याति पराङ्गतिम्।
योऽश्वं रथं गजं वापि ब्राह्मणे यदि दापयेत्॥ १४॥
स्वमहिम्नोऽनुसारेण तत्तत् सुखमवाप्नुयात्।
नानालोकान् विचरति महिषीं यो ददाति च॥ १५॥
यमवाहस्य जननी महिषी सुगतिप्रदा।
ताम्बूलं पुष्पदानेन याम्यानां प्रीतिवर्द्धनम्॥ १६॥
तेन संप्रीणिताः सर्वे तस्मिन् क्लेशं न कुर्वते।
गोभूतिलहिरण्यादिदानानि निजशक्तितः॥ १७॥
मृतोद्देशेन यो दद्याज्जलपात्रञ्च मृण्मयम्।

...दपाश्वसहस्रस्य फलमाप्नोति मानवः ॥ १८ ॥
...मदूता महारौद्राः करालाः कृष्णपिङ्गलाः।
... भीषयन्ति तं तार्क्ष्य! वस्त्रदाने कृते सति ॥ १९ ॥
...र्गे वै गच्छमानस्तु तृषार्त्तः श्रमपीड़ितः।
...टाम्बदानयोगेन सुखी भवति निश्चितम् ॥ २० ॥
...य्यातूलीपट्टयुता दद्याद्देवद्विजातये।
...या प्रेतत्वमुक्तोऽसौ मोदते सह दैवतैः ॥ २१ ॥
एतत्ते कथितं तार्क्ष्य! दानमन्त्येष्टिकर्मजम्।
अधुना कथयिष्येऽहं देहे मृत्युप्रवेशनम् ॥ २२ ॥
जातस्य मर्त्यलोकेऽस्मिन् प्राणिनो मरणं ध्रुवम्।
पूर्वकाले मृतानान्तु प्राणिनाञ्च खगेश्वर! ॥ २३ ॥
सूक्ष्मीभूत्वा त्वसौ वायुर्निर्गच्छत्यस्य तद्बलात्।
नवद्वारैरोमभिश्च जातानां तालुरन्ध्रकात् ॥ २४ ॥
पापिष्ठानामपानेन जीवो निष्क्रामति ध्रुवम्।
कुणपं पतते पश्चान्निर्गते मरुदीश्वरे ॥ २५ ॥
कालाहतः पतत्येव निराधारो यथा द्रुमः।
पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च ॥ २६ ॥
तेजस्तेजसि लीयेत समीरे च समीरणः।
आकाशे च तथाकाशं सर्वव्यापी तु शङ्करे ॥ २७ ॥
तत्र कामादयो पञ्च काये पञ्चेन्द्रियाणि च।
एते तार्क्ष्य! समाख्याता देहे तिष्ठन्ति तस्कराः ॥ २८ ॥
कामक्रोधौ ह्यहङ्कारो मनस्तत्रैव नायकः।
संहारकश्च कालोऽसौ पुण्यपापेन संयुतः ॥ २९ ॥
जगतश्च स्वरूपञ्च निर्मितं स्वेन कर्मणा।
गच्छेद्देहं पुनः सोऽपि सुकृतैर्दुष्कृतैर्युतम् ॥ ३० ॥
पञ्चेन्द्रियसमायुक्तं सकलैर्विषयैः सह।

प्रविवेश नवे गेहे गृहे दग्धे यथा गृही ॥ ३१ ॥
शरीरे ये समासीनाः सम्भवे सर्वधातवः।
मूत्रं पुरीषं तद्योगाद् ये चान्ये धातवस्तथा ॥ ३२ ॥
पित्तं श्लेष्मा तथा मज्जा मांसं मेदस्तथैव च।
अस्थि शुक्रञ्च स्नायुश्च देहेन सह दह्यते ॥ ३३ ॥
एतेषां कथिता तार्क्ष्य ! संस्थितिः सर्वदेहिनाम्।
कथयामि पुनस्तेषां शरीरञ्च यथा भवेत् ॥ ३४ ॥
एकस्तम्भस्नायुबद्धं स्थूणाद्वयविभूषितम्।
इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ॥ ३५ ॥
विषयैश्च समाक्रान्तं कामक्रोधसमाकुलम्।
रागद्वेषसमाकीर्णं तृष्णादुर्गतिसंयुतम् ॥ ३६ ॥
लोभजालपरिच्छिन्नं मोहवस्त्रेण वेष्टितम्।
सुबद्धं मायया चैव चेतनाधिष्ठितं पुरम् ॥ ३७ ॥
षाट्कौशिकसमुत्पन्नं पुरं पुरुषसंश्रितम्।
एतद्गुणसमायुक्तं शरीरं सर्वदेहिनाम् ॥ ३८ ॥
तिष्ठन्ति देवताः सर्वा भुवनानि चतुर्दश।
आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः ॥ ३९ ॥
एवमेव समाख्यातं शरीरं ते चतुर्विधम्।
चतुरशीतिलक्षाणि निर्मितानि मया पुरा ॥ ४० ॥
स्वेदजा उद्भिज्जाश्चैव अण्डजाश्च जरायुजाः।
एतत्ते सर्वमाख्यातं यत् पृष्टोऽहन्त्वयानघ ! ॥४१॥

इति श्रीगारुड़े महापुराणे प्रेतकल्पे
एकविंशोऽध्यायः।

---

## द्वाविंशोऽध्यायः।

गरुड़ उवाच। कथमुत्पद्यते जन्तुर्भूतग्रामचतुष्टये।

त्वचा रक्तं तथा मांसं मेदो मज्जास्थि जीवितम् ॥१॥
पाणिपादौ तथा जिह्वा गुह्यं केशा नखास्तथा ।
सन्धिमार्गाश्च बहुशो रेखानेकविधा तथा ॥ २ ॥
कामक्रोधौ भयं लज्जा मनो हर्षः सुखासुखम् ।
चिवितं छिद्रितं वापि वसाजालेन वेष्टितम् ॥ ३ ॥
इन्द्रजालमहं मन्ये संसारेऽसारसागरे ।
कर्त्ता कोऽत्र महाबाहो ! सर्वं वद मम प्रभो ! ॥ ४ ॥
भगवानुवाच । कथयामि परं गुह्यं कालोद्धारविनिर्णयम् ।
येन विज्ञातमात्रेण सर्वज्ञत्वं प्रजायते ॥ ५ ॥
साधु पृष्टं त्वया लोके यदिदं जीवकारणम् ।
वैनतेय ! शृणुष्व त्वमेकाग्रकृतमानसः ॥ ६ ॥
ऋतुकाले तु नारीणां त्यजेद्दिनचतुष्टयम् ।
तिष्ठत्यस्मिन् ब्रह्महत्या पुराकृतसमुद्भवा ॥ ७ ॥
वेधाः शक्रात् समुत्सार्य्य चतुर्थांशेन दत्तवान् ।
तावन्नालोकयेत् वक्त्रं यावत् पापञ्च तिष्ठति ॥ ८ ॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ ९ ॥
सप्ताहात् पितृदेवानां भवेद् योग्या व्रतार्च्चने ।
सप्ताहमध्ये यो गर्भस्तत्सम्भूतिर्मलिम्लुचा ॥ १० ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
पूर्वसप्तकमुत्सृज्य ततो युग्मेषु संविशेत् ॥ ११ ॥
षोड़शर्त्तुनिशाः स्त्रीणां सामान्यात् समुदाहृताः ।
या चतुर्दशमी रात्रिर्गर्भस्तिष्ठति तत्र चेत् ॥ १२ ॥
गुणभाग्यनिधिस्तत्र पुत्रो जायेत धार्मिकः ।
सा निशा तत्र सामान्यैर्न लभ्येत कदाचन ॥ १३ ॥
प्रायशः सम्भवन्त्यत्र गर्भास्त्वष्टाहमध्यतः ।

पञ्चमेऽह्नि नारीणां गौल्यमाधुर्य्यभोजनम् ॥१४॥
कटुक्षारञ्च तीक्ष्णञ्च साज्यं युवतिभोजनम्।
स्त्री चेत्रमौषधी पात्रं वीजं वाप्यमृताशनम्॥ १५॥
तत्र वप्ता नरः सम्यक् जन्तुस्तत्र निषिच्यते।
तस्यास्चैवातपो वर्ज्यः शीतलं केवलं चरेत्॥ १६॥
ताम्बूलगन्धश्रीखण्डैः समं सङ्गः शुभेऽहनि।
निषेकसमये यादृङ् नरचित्ते विकल्पना॥ १७॥
तादृक्स्वभावसम्भूतिर्जन्तुर्वसति कुक्षिगः।
शुक्रशोणितसंयोगे पिण्डोत्पत्तिः प्रजायते॥ १८॥
वर्द्धते जठरे जन्तुस्तारापतिरिवाम्बरे।
चैतन्यं वीजरूपे हि शुक्रे नित्यं व्यवस्थितम्॥ १९॥
कामं चित्तञ्च शुक्रञ्च यदा ह्येकत्वमाप्नुयुः।
तदा द्रवमवाप्नोति योषागर्भाशये नरः॥ २०॥
रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेन्नरः।
शुक्रशोणितयोः साम्ये गर्भः षण्डत्वमाप्नुयात्॥ २१॥
अहोरात्रेण कलिलम्बुद्बुदं पञ्चभिर्दिनैः।
दशमेऽह्नि भवेन्मांसमिश्रधातुसमन्वितम्॥ २२॥
घनमांसञ्च विंशाहे गर्भस्थो वर्द्धते क्रमात्।
पञ्चविंशतिपूर्णाहे वलं पुष्टिश्च जायते॥ २३॥
तथा मासे तु सम्पूर्णे पञ्चतत्त्वानि धारयेत्।
मासद्वये तु सम्पूर्णे त्वचा मेदश्च जायते॥ २४॥
मज्जास्थीनि त्रिभिर्मासैः केशा गुल्फाश्चतुर्थके।
कर्णौ च नासिकाकुक्षी जायेते मासि पञ्चके॥ २५॥
कण्ठरन्ध्रं तथा पृष्ठं गुह्याख्यं मासि सप्तमे।
अङ्गप्रत्यङ्गसम्पूर्णो गर्भो मासैरथाष्टभिः॥ २६॥
नवमे मासि सम्प्राप्ते गर्भस्थस्य रतिः स्वयम्।

इच्छा सञ्जायते तस्य गर्भवासविनिःसृतौ ॥ २७ ॥
नारी वाथ नरो वाथ नपुंसकं वाभिजायते।
नवमे दशमे वापि जायते यश्च भौतिकः ॥ २८ ॥
प्रसूतवायुनाक्रष्टः पीड़या विह्वलीकृतः।
क्षितिर्वारि हविर्भोक्ता पवनाकाशमेव च ॥ २९ ॥
एभिर्भूतैः पीड़ितस्तु निबद्धः स्नायुबन्धनैः।
त्वचास्थिनाड्यो रोमाणि मांसञ्चैवात्र पञ्चमम् ॥ ३० ॥
एते पञ्चगुणाः प्रोक्ताः मया भूमेः खगेश्वर!।
यथा पञ्चगुणा आपस्तथा शृणु च काश्यप! ॥ ३१ ॥
लाला मूत्रं तथा शुक्रं मज्जा रक्तञ्च पञ्चमम्।
अपाम्पञ्च गुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः ॥ ३२ ॥
क्षुधा निद्रा च तृष्णा च आलस्यं कान्तिरेव च।
तेजः पञ्चगुणं तार्क्ष्य! प्रोक्तं सर्वत्र योगिभिः ॥ ३३ ॥
धावनं श्वसनञ्चैव आकुञ्चनप्रसारणम्।
निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः ॥ ३४ ॥
रागद्वेषौ तथा लज्जा भयम्मोहस्तथैव च।
इत्येतत् कथितं तार्क्ष्य! वायुजं गुणपञ्चकम् ॥ ३५ ॥
घोषश्छिद्राणि गाम्भीर्य्यं श्रवणं सर्वसंश्रयः।
आकाशस्य गुणाः पञ्च ज्ञातव्यास्तार्क्ष्य! यत्नतः ॥ ३६ ॥
श्रोत्रं त्वक् चक्षुषी जिह्वा नासा बुद्धीन्द्रियाणि च।
पाणिपादौ गुदं वाक् चोपस्थं कर्मेन्द्रियाणि च ॥ ३७ ॥
इड़ा च पिङ्गला चैव सुषुम्ना च तृतीयका।
गान्धारी गजजिह्वा च पूषा चैव यशा तथा ॥ ३८ ॥
अलम्बुषा कुहश्चैव शङ्खिनी दशमी तथा।
पिण्डमध्ये स्थिता ह्येताः प्रधाना दशनाड़यः ॥ ३९ ॥
प्राणोऽपानः समानश्च उदानो व्यान एव च।

नागः कूर्मश्च क्रकरो देवदत्तो धनञ्जयः ॥ ४० ॥
इत्येते वायवः प्रोक्ता दश देहेषु संस्थिताः।
केवलं भुक्तमन्नञ्च पुष्टिदं सर्वदेहिनाम् ॥ ४१ ॥
नयति प्राणदो वायुः शरीरे सर्वसन्धिषु।
आहारो भुक्तमात्रस्तु वायुना क्रियते द्विधा ॥ ४२ ॥
सम्प्रविश्य गुदे याति पृथगन्नं पृथक् जलम्।
ऊर्द्ध्वमग्नेर्जलं कृत्वा तदन्नञ्च जलोपरि ॥ ४३ ॥
अग्नेश्चाधः स्थितः प्राणो ह्यग्निन्तन्तु धमेच्छनैः।
वायुना धम्यमानोऽग्निः पृथक्किट्टं पृथग्रसम् ॥ ४४ ॥
मलैर्द्वादशभिः किट्टं भिन्नं देहात् पृथग्भवेत्।
कर्णाक्षि नासिका जिह्वा दन्ता नाभिर्गुदं वपुः ॥ ४५ ॥
नखा मलाश्रयश्चेदं विण्मूत्रं वेत्यनन्तरम्।
शुक्रशोणितसंयोगाद्देहः षाट्कौशिकः स्मृतः ॥ ४६ ॥
रोमकोटिस्तथा तिस्रो ह्यर्द्धकोटिसमन्विता।
द्वात्रिंशद्दशनास्तत्र सामान्याद्विनतासुत ! ॥ ४७ ॥
विंशतिस्तु नखाः केशास्तिलचं सुखमूर्द्धजाः।
मांसम्पलसहस्रैकं सामान्याद्देहसंस्थितम् ॥ ४८ ॥
रक्तं पलशतं तार्क्ष्य ! बद्धमेतत् पुरातनैः।
पलानि दश मेदश्च त्वचा चैव तु तत्समः ॥ ४९ ॥
पलं द्वादशकं मज्जा महारक्तं पलत्रयम्।
शुक्रं द्विकुड़वं ज्ञेयं शोणितं कुड़वं स्मृतम् ॥ ५० ॥
श्लेष्मणश्च षड़ंशश्च विण्मूत्रं तत्प्रमाणतः।
एष पिण्डः समाख्यातो वैभवं सम्प्रचक्ष्महे ॥ ५१ ॥
ब्रह्माण्डे ये गुणाः सन्ति शरीरे ते व्यवस्थिताः।
पातालभूधरालोकास्तथा द्वीपाः ससागराः।
आदित्याद्या ग्रहाः सर्वे पिण्डमध्ये व्यवस्थिताः ॥ ५२ ॥

पादाधस्तु तलं ज्ञेयं पादोर्द्ध्वं वितलं तथा ।
जानुभ्यां सुतलं विद्धि जङ्घासु च तलातलम् ॥ ५३ ॥
तथा रसातलञ्चोर्व्वोर्गुह्यदेशे महातलम् ।
पातालं कटिसंस्थन्तु पादतो लक्षयेद्बुधः ॥ ५४ ॥
भूर्लोकं नाभिमध्ये तु भुवर्लोकन्तदूर्द्ध्वतः ।
स्वर्लोकं हृदये विन्द्यात् कण्ठदेशे महस्तथा ॥ ५५ ॥
जनलोकं वक्त्रदेशे तपोलोकं ललाटके ।
सत्यलोकं महारन्ध्रे भुवनानि चतुर्द्दश ॥ ५६ ॥
त्रिकोणे संस्थितो मेरुरधःकोणे च मन्दरः ।
दक्षिणे चैव कैलासो वामकोणे हिमाचलः ॥ ५७ ॥
निषधश्चोर्द्ध्वभागे तु दक्षिणे गन्धमादनः ।
रमणो वामरेखायां सप्तैते कुलपर्व्वताः ॥ ५८ ॥
अस्थिस्थाने स्थितो जम्बुः शाकं मज्जासु संस्थितम् ।
कुशद्वीपः स्थितो मांसे क्रौञ्चद्वीपः शिरःस्थितः ॥ ५९ ॥
त्वचायां शाल्मलीद्वीपो गोमेदो रोमसञ्चये ।
नखस्थं पुष्करद्वीपं सागरास्तदनन्तरम् ॥ ६० ॥
क्षीरोदश्च तथा मूत्रे क्षीरे क्षीरोदसागरः ।
सुरोदधिः श्लेष्मसंस्थो मज्जायां घृतसागरः ॥ ६१ ॥
रसोदधिं रसे विन्द्यात् शोणिते दधिसागरम् ।
स्वादूदकञ्च विट्स्थाने गर्भोदं शुक्रसंस्थितम् ॥ ६२ ॥
नादचक्रे स्थितः सूर्य्यो विन्दुचक्रे तु चन्द्रमाः ।
लोचनाभ्यां कुजो ज्ञेयो हृदये च बुधः स्मृतः ॥ ६३ ॥
विष्णुस्थाने गुरुं विन्द्यात् शुक्रे शुक्रो व्यवस्थितः ॥ ६४ ॥
नाभिस्थाने स्मृतो मन्दो मुखे राहुः स्मृतः सदा ।
पादस्थाने स्मृतः केतुः शरीरे ग्रहमण्डलम् ॥ ६५ ॥
विभक्तञ्च समाख्यातं आपादतलमस्तकम् ।

उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः॥ ६६॥
बुभुक्षा च तृषा रौद्रादाघोद्भूता च मूर्च्छना।
यत्र पीड़ास्त्विमा रौद्राः सर्ववृश्चिकदंशजाः॥ ६७॥
तप्तवालुकमध्येन प्रज्वलद्वह्निमध्यतः।
केशग्राहैः समाक्रान्ता नीयन्ते यमकिङ्करैः॥ ६८॥
पापिष्ठास्त्वधमास्तार्क्ष्य! दयाधर्मविवर्जिताः।
यमलोके वसन्त्येव कुर्व्यां जन्म च विद्यते॥ ६९॥
एवं सञ्जायते तार्क्ष्य! मर्त्ये जन्तुः स्वकर्मभिः।
आयुः कर्म च वित्तञ्च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः॥ ७०॥
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥ ७१॥
अधोमुखं चोर्द्ध्वपादं गर्भाद्वायुः प्रकर्षति।
जन्मतो वैष्णवी माया सम्मोहयति सत्वरम्॥ ७२॥
स्वकर्मकृतसम्बन्धो जन्तुर्जन्म प्रपद्यते।
सुकृतादुत्तमो भोगी भाग्यवान् सुकुले भवेत्॥ ७३॥
यथा दुष्कृतकर्मा हि कुले हीने प्रजायते।
दरिद्रो व्याधितो मूर्खः पापकृद् दुःखभाजनः।
उत्पत्तेर्लक्षणं जन्तोः कथितं स्त्वपिपुत्त्वक!॥ ७४॥

इति श्रीगारुड़े महापुराणे प्रेतकल्पे
द्वाविंशोऽध्यायः।

---

## त्रयोविंशोऽध्यायः।

तार्क्ष्य उवाच। यमलोकं कियन्मात्रं त्रैलोक्ये सचराचरे।
विस्तारं तस्य मे ब्रूहि अध्वा चैव कियान् स्मृतः॥१॥
कैः कैः पापैः कृतैर्देव! केन वा शुभकर्मणा।

गच्छन्ति मानवास्तत्र कथयस्व जनार्दन ! ॥ २ ॥
श्रीभगवानुवाच। षड़शीतिसहस्राणि योजनानां प्रमाणतः।
यमलोकस्य चाध्वानं ह्यन्तरा मानुषस्य च ॥ ३ ॥
आततताम्रमिवातप्तो ज्वलन् दुर्गो महापथः।
तत्र गच्छन्ति पापिष्ठा मानवा मूढ़चेतसः ॥ ४ ॥
कण्टकास्तीक्ष्णकाश्चैव विविधा घोरदारुणाः।
तत् तु वर्त्म चितिर्व्याप्तं हुताशश्च तथोल्वणः ॥ ५ ॥
वृक्षच्छाया न तत्रास्ति यत्र विश्रमते नरः।
गृहीतकालपाशैस्तु कृतैः कर्मभिरुल्वणैः ॥ ६ ॥
तस्मिन् मार्गे न चान्नाद्यं येन प्राणान् प्रपोषयेत्।
जलं न दृश्यते तत्र तृषा येन विलीयते॥ ७ ॥
क्षुधया पीड़ितो याति तृषया च महापथि।
शीतेन कम्पितः क्वापि यममार्गेऽतिदुर्गमे ॥ ८ ॥
यद् यस्य यादृशं पापं स पन्थास्तस्य तादृशः।
सुदीनाः कृपणा मूढ़ा दुःखैर्व्याप्तास्तरन्ति वै ॥ ९ ॥
रुदन्ति करुणं केचित् केचिद्रौद्रं वदन्ति वै।
आत्मकर्मकृतैर्दोषैस्तप्यमाना मुहुर्मुहुः ॥ १० ॥
ईदृग्विधः स वै पन्था विज्ञेयो दारुणः खग !।
वितृष्णा ये नरा लोके सुखं तस्मिन् व्रजन्ति ते ॥११॥
यानि यानि च दानानि दत्तानि भुवि मानवैः।
तानि तान्युपतिष्ठन्ति यमलोके पुरःसरम् ॥ १२ ॥
पापिनां नोपतिष्ठन्ति दत्ताः श्राद्धजलाञ्जलिः।
भ्रमन्ति वायुभूताश्च ये क्षुद्राः पापकर्मिणः ॥ १३ ॥
ईदृशं वर्त्म वै रौद्रं कथितं तव सुव्रत !।
पुनश्च कथयिष्यामि यमलोकस्य या गतिः ॥ १४ ॥
याम्यनैरृतयोर्मध्ये पुरं वैवस्वतस्य च।

सर्वं वज्रमयं दिव्यमभेद्यं यत् सुरासुरैः ॥ १५ ॥
चतुरस्रं चतुर्द्वारं सप्तप्राकारतोरणम्।
स्वयं तिष्ठति तस्यान्तर्यमो दूतैः समन्वितः ॥ १६ ॥
योजनानां सहस्रं हि प्रमाणेन तु दृश्यते।
सर्वं रत्नमयं दिव्यं विद्युज्ज्वालार्कवर्चसम् ॥ १७ ॥
तद् गृहं धर्मराजस्य विस्तीर्णं काञ्चनप्रभम्।
पञ्चविंशप्रमाणेन योजनानि समुच्छ्रितम् ॥ १८ ॥
वृतं स्तम्भसहस्रैस्तु वैदूर्य्यमणिमण्डितम्।
मुक्ताजालं गवाक्षन्तु पताकाशतभूषितम् ॥ १९ ॥
घण्टाशतनिनादाढ्यं तोरणानां शतैर्वृतम्।
एवमादिभिरन्यैश्च भूषणैर्भूषितं सदा ॥ २० ॥
तत्रस्थो भगवान् धर्म आसने नियमे शुभे।
दशयोजनविस्तीर्णे नीलजीमूतसन्निभे ॥ २१ ॥
धर्मज्ञो धर्मशीलश्च धर्मयुक्तहितो यमः।
भयदः पापयुक्तानां धर्मिणाञ्च सुखप्रदः ॥ २२ ॥
मन्दमारुतसंयोगैर्विविधैरुत्सवैस्तथा।
व्याख्याभिर्बहुभिर्युक्तः शङ्खवादित्रनिस्वनैः ॥ २३ ॥
पुरमध्ये प्रवेशे तु चित्रगुप्तस्य वै गृहम्।
पञ्चविंशतिसंख्यानां योजनानां प्रमाणतः ॥ २४ ॥
दशोच्छ्रितं महादिव्यं लोहप्राकारवेष्टितम्।
प्रतोलीशतसञ्चारं पताकाशतशोभितम् ॥ २५ ॥
दीपिकाशतसंकीर्णं गीतध्वनिसमाकुलम्।
चित्रितं चित्रकुशलैश्चित्रगुप्तस्य वै गृहम् ॥ २६ ॥
मणिमुक्तामये दिव्ये आसने परमाद्भुते।
तत्रस्थो गणयत्यायुर्मानुषेष्वितरेषु च ॥ २७ ॥
न मुह्यति कथञ्चित् सः सुकृते दुष्कृतेऽपि च।

जन्मनोपार्जितं यावत् सदसद्देति तस्य तत् ॥ २८ ॥
दशाष्टदोषरहितं कृतं कर्म लिखत्यसौ।
चित्रगुप्तगृहात् प्राच्यां ज्वरस्यास्ति महागृहम् ॥ २९ ॥
दक्षिणे चापि शूलस्य लूताविस्फोटकस्य च।
पश्चिमे कालपाशस्य अजीर्णस्यारुचेस्तथा ॥ ३० ॥
मध्यपीठोत्तरे ज्ञेया तथा चान्या विसूचिका।
ऐशान्यां वै शिरोऽर्त्तिः स्यादाग्नेय्यां चैव मूर्च्छना ॥ ३१ ॥
अतिसारस्तु नैर्ऋत्यां वायव्यां दाहसंज्ञकः।
एभिः परिवृतो नित्यं चित्रगुप्तः स तिष्ठति।
यत् कर्म क्रियते यैश्च तत् सर्वं तु लिखत्यसौ ॥ ३२ ॥
धर्मराजगृहद्वारि दूतास्तार्क्ष्य ! तथा दिशि।
तिष्ठन्ति पापकर्माणः पीड़यन्तो नराधमान् ॥ ३३ ॥
यमदूतैर्महापाशैस्ताड्यमानाश्च मुद्गरैः।
बध्यन्ते विविधैः पाशैः पूर्वकर्मकृतैर्नराः ॥ ३४ ॥
नानाप्रहरणैश्चैव नानायन्त्रैस्तथापरैः।
पीड्यन्ते पापकर्माणः क्रकचैः काष्ठवद्विधा ॥ ३५ ॥
अन्ये च ज्वलमानैस्तु अङ्गारैः परितो भृशम्।
पूर्वकर्मविपाकेन ध्मायन्ते लोहपिण्डवत् ॥ ३६ ॥
छिन्नाश्चान्ये धरापृष्ठे कुठारेण च कर्त्तिताः।
क्रन्दमानाश्च दृश्यन्ते पूर्वकर्मविपाकतः ॥ ३७ ॥
केचिन्निगड़पाशैश्च तैलपाकैस्तथापरे।
हन्यन्ते यमदूतैश्च पापिष्ठाः सुभृशं नराः ॥ ३८ ॥
ऋणानि प्रार्थयन्त्यन्ये देहि देहीति कोटिशः।
यमलोके मया दृष्टाः स्वमांसं भक्षयन्ति हि ॥ ३९ ॥
इत्येवं बहवस्तार्क्ष्य ! नरकाः पापिनां स्मृताः।
किमेभिर्विस्तरप्रोक्तैः सर्वशास्त्रेषु भाषितैः।

दानोपकारं वक्ष्यामि यथा तत्र सुखं भवेत् ॥ ४० ॥

इति श्रीगारुड़े महापुराणे प्रेतकल्पे
त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

श्रीकृष्ण उवाच। शृणु तार्क्ष्य! यथान्यायं धर्माधर्मस्य लक्षण
सुकृतं दुष्कृतं नृणामग्रे धावति धावति ॥ १ ॥
कृते तपः प्रशंसन्ति त्रेतायां ज्ञानसाधनम् ।
द्वापरे यज्ञदानञ्च दानमेकं कलौ युगे ॥ २ ॥
गृहस्थानां स्मृतौ प्रोक्तान् धर्मानालपतां तथा ।
इष्टापूर्त्तं स्वया शक्त्या कुर्वतां नास्ति पातकम् ॥ ३ ॥
वृक्षास्तु रोपिता येन तड़ागादि जलाशयाः ।
कृता येन हि मार्गेऽस्मिन् सुखं याति स मानवः ॥ ४
हिमे तुषारशीताभ्यां पीड्यते न यमालये ।
तप्यमानः सुखं याति इन्धनानि ददाति यः ॥ ५
हृष्टा विभूषिताश्चैव गन्धपुष्पसमन्विताः ।
भूमिदानैः सुखं यान्ति सर्वकामैश्च पूरिताः ॥ ६ ।
सुवर्णमणिमुक्तादिवस्त्राण्याभरणानि च ।
तेन सर्वमिदं दत्तं येन दत्ता वसुन्धरा ॥ ७ ॥
यानि यानि च दानानि कृतानि भुवि मानवैः ।
यमलोकपथे तानि तिष्ठन्त्यग्रे समीपतः ॥ ८ ॥
व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च ।
विधिना ददते पुत्त्रैः पित्रे तदुपतिष्ठति ॥ ९ ॥
आत्मा वै पुत्त्रनामा हि पुत्त्रस्त्राता यमालये ।
नरकात् पितरं त्रायेत्तेन पुत्त्र इति स्मृतः ॥
अतो देयञ्च पुत्त्रेण आद्यमाजीवितावधि ।

प्रतिवाहस्तदा प्रेतो भोगांश्च लभते हि सः॥ ११॥
दह्यमानस्य प्रेतस्य स्वजनैर्यैर्जलाञ्जलिः।
दीयते प्रीतरूपोऽसौ प्रेतो याति यमालयम्॥ १२॥
अपक्के मृण्मये पात्रे दुग्धं दद्याद्दिनत्रयम्।
काष्ठत्रयं गुणैर्बद्धा प्रेतप्रीत्यै चतुष्पथे॥ १३॥
प्रथमेऽह्नि द्वितीये च तृतीये च तथा खग!।
आकाशस्थः पिबेद् दुग्धं प्रेतो वायुवपुर्धरः॥ १४॥
चतुर्थे सञ्चयः कार्य्यः सर्वैस्तु सह गोत्रजैः।
ततः सञ्चयनादूर्द्ध्वं गङ्गास्पर्शो विधीयते॥ १५॥
द्वितीये च तृतीये च चतुर्थे वापि साग्निकैः।
अस्थिसञ्चयनादूर्द्ध्वं प्रदद्यादञ्जलिं ततः॥ १६॥
न पूर्वाह्णे न मध्याह्ने नापराह्णे च सन्धिषु।
प्रातः प्रथमयामेषु दद्यादाद्यजलाञ्जलिम्॥ १७॥
पुत्त्रेण दत्तैस्तैः सर्वैर्गोत्रजैः सह बान्धवैः।
स्वजात्यैः परजात्यैश्च देय आद्यजलाञ्जलिः॥ १८॥
गन्तव्यं नैव विप्रेण दातुं शूद्रे जलाञ्जलिम्।
निवृत्ताश्च यदा तीराल्लोकाचारस्ततो भवेत्॥ १९॥
पञ्चत्वञ्च गते शूद्रे यः काष्ठं नयते चिताम्।
अनुव्रजेत्तथा विप्रस्त्रिरात्रमशुचिर्भवेत्॥ २०॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥ २१॥
शूद्रो गच्छति सर्वेषु वैश्यस्त्रिषु द्वयेऽपरः।
गच्छति स्वेषु वर्णेषु विप्रो दातुं जलाञ्जलिम्॥ २२॥
अधरोत्तरवस्त्राभ्यां वस्त्रग्रन्थिञ्च दापयेत्।
एकवस्त्रो प्रदद्यात् तु सदर्भञ्च तिलाञ्जलिम्॥ २३॥
यदा दातुञ्च गच्छन्ति दन्तधावनपूर्वकम्।

त्यजन्ति गोत्रजाः सर्वे दिनानि नव काश्यप ! ॥ २४ ॥
जलाञ्जलिं यदा दातुं गच्छति द्विजसत्तम ! ।
यस्मिन् स्थाने मिलेद् यस्तु अध्वन्यपि गृहेऽपि वा ॥२५॥
विश्लेषस्तु ततः स्थानात् पादाद्याद्विहितो बुधैः ।
स्त्रीजनश्चाग्रतो गच्छेत् पृष्ठतो नरसञ्चयः ॥ २६ ॥
तत आचमनं कार्य्यं पाषाणोपरिसंस्थितैः ।
यवांश्च सर्षपान् दूर्वां पूर्णपात्रे विलोकयेत् ॥ २७ ॥
प्राशयेन्निम्बपत्राणि गेहस्नानं समाचरेत् ।
गोत्रजेन च कर्त्तव्यं गृहान्नं नैव भोजयेत् ॥ २८ ॥
भुञ्जीत मृण्मये पात्रे उत्तानञ्च विवर्जयेत् ।
मृतकस्य गुणा ग्राह्या यमगाथां समुच्चरेत् ॥ २९ ॥
शुभाशुभौ च ध्यायन्तः पूर्वकर्मोपसञ्चितौ ।
अलब्धेन च देहेन भुङ्क्ते सुकृतदुष्कृते ॥ ३० ॥
वायुरूपो भ्रमत्येव वायुः कुट्यां स गच्छति ।
दशाहे कर्म क्रियते जायते तेन सा कुटी ॥ ३१ ॥
क्षुधाविभ्रममापन्नो दशाहे यो न तर्पितः ।
पिण्डैस्तस्य तदाऽन्नञ्च आकाशे भ्रमते तु सः ॥ ३२ ॥
दिनत्रयं वसेत्तोये अग्नौ चापि दिनत्रयम् ।
आकाशे च वसेत् त्रीणि दिनमेकञ्च वासवे ॥ ३३ ॥
गृहद्वारे श्मशाने वा तीर्थे देवालये तथा ।
यत्रादौ दीयते पिण्डस्तत्र सर्वान् समापयेत् ॥ ३४ ॥
एकादशाहे यच्छ्राद्धं तत् सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां शुद्धये स्नानमिष्यते ॥ ३५ ॥
स्नात्वा चैकादशाहन्तु पुनः स्नात्वा शुचिर्भवेत् ।
न भवेच्च यदा गोत्री परोऽपि विधिमाचरेत् ॥ ३६ ॥
स्त्री वापि पुरुषः कश्चिदिष्टये कुरुते क्रियाम् ।

